## ।। पुरुषसूक्त ।।

ॐ सहस्त्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात ।
स भुमि सर्वत स्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ।।१।।
पुरुष एवेद सर्वं यद्भूतं यच्च भाव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।। २।।
एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भुतानि त्रिपादस्यामृतं दिवि।। ३।।
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत् पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ।। ४।।
ततो विराडजायत विराजो अधि पूरुष ।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ।। ५।।
तस्माद्यज्ञात् सर्वहुतः सम्भृतं पृषदाज्यम्।
पशूँस्ताँश्चक्रे वायव्यानारण्या ग्राम्याश्च ये ।। ६।।
तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दा सि जज्ञिरे तस्माद्यजुस्तस्मादजायत ।। ७।।
तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः।। ८।।
त यज्ञ बर्हिषि प्रौक्षन् पुरूष जातमग्रतः ।
तेन देवा अयजन्त साध्या ऋषयश्च ये ।। ९।।
यत्पुरुष व्यदधुः कतिधा व्यकल्पयन् ।
मुख किमस्यासीत् किं बाहू किमूरू पादा उच्येते। १०
ब्राह्मणोऽस्य मुखमासीदबाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्या शूद्रो अजायत। ११।।
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत ।। १२।।
नाभ्या आसीदन्तरिक्ष शीर्ष्णो द्यौः समवर्तत ।
पद्भ्यां भुमिर्दिशः श्रोत्रात्तथा लोकाँ२अकल्पयन्। १३।
यत्पुरूषेण हविषा देवा यज्ञमतन्वत ।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ।। १४।।
सप्तास्यासन् परिधयस्त्रि सप्त समिधः कृताः ।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ।। १५ ।।
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पुर्वे साध्याः सन्ति देवाः।। १६।।

।। इति पुरुष सूक्तम् ।।

## ।। रूद्रसूक्त ।।

ॐ नमस्ते रूद्र मन्यव उतो त इषवे नमः ।
बाहुभ्यामुत ते नमः ।।
या ते रूद्र शिवा तनुरघोराऽपापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि ।।
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरू मा हि सीः पुरूषं जगत्।
शिवेन वचसा त्वा गिरिशाच्छा वदामसि ।
यथा नः सर्वमिज्जगदयक्ष्म सुमना असत् ।।
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधन्योऽधराचीः परा सुव ।।
असौ यस्ताम्रो अरूण उत बभ्रुः सुमङ्गलः ।
ये चैन रूद्रा अभितो दिक्षु श्रिताः सहस्त्रशोऽवैषा हेड ईमहे ।।
असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृश्रनदृश्रन्नुदहार्यः स दृष्टोमृडयाति नः ।।
नमोऽस्तु नीलग्रीवाय सहस्त्राक्षाय मीढुषे ।
अथो ये अश्य सत्वानोऽहं तेभ्योऽकरं नमः ।।
प्रमुञ्च धन्वनस्त्वमुभयोरार्त्न्योर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ।।
विज्यं धनुः कपर्दिनो विशल्यो बाणवाँ२ उत ।
अनेशन्नस्य या इषव आभुरस्य निषङ्गधिः ।।
या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान्विश्वतस्त्वमयक्ष्मया परि भुज ।।
परि ते धन्वनो हेतिरस्मान्वृणक्तु विश्वतः।
अथो य इषुधिस्तवारे अस्मनि धेहि तम्।।
अवतत्य धनुष्ट्व सहस्त्राक्षशतेषुधे ।
निशीर्यशल्यानां मुखा शिवो नः सुमना भव ।।
नमस्त आयुधायानातताय धृष्णवे ।
उभाभ्यामुत ते नमो बाहुभ्यां तव धन्वने ।।
मा नो महान्तमुत मा नो
अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।
मा नो वधीः पितरं मोत
मातरं मा नः प्रियास्तन्वो रूद्र रीरिषः ।।
मा नस्तोके तनये मान आयुषि
मा नो गोषु मानो अश्वेषु रीरिषः ।
मा नो वीरान् रूद्र भामिनो
वधीर्हविष्मन्तः सदमित्त्वा हवामहे ।।१६।।

## सङ्कटा—स्तुतिः

**प्रयोजन**—महालक्ष्मी, महासरस्वती व महाकाली की कृपा तथा दर्शन कराने वाला अमोघ व परम तेजस्वी स्तोत्र। इसी स्तोत्र द्वारा महाकवि कालिदास ने मां भद्रकाली की उपासना कर साक्षात् दर्शन किये थे तथा वेद उपनिषदों का ज्ञान आशीर्वाद स्वरूप पाकर ज्ञानियों मे सर्वश्रेष्ठ ज्ञानी हुए थे।)

अयि गिरी—नन्दिनि नन्दित—मेदिनि विश्व—विनोदिनि नन्दिनुते
गिरिवर-विन्ध्य-शिरोऽधि-निवासिनि विष्णु-विलासिनि जिष्णुनुते।
भगवति हे शितिकण्ठ—कुटुम्बिनि भूरि—कुटुम्बिनि भूतिकृते ।
जय जय हे महिषासुर—मर्दिनि रम्यकपर्दिनि शैलसुते ।।१।।
सुर—वरवर्षिणि दुर्धर—धर्षिणि दुर्मुख—मर्षिणि हर्षरते
त्रिभुवन—पोषिणि शंकरतोषिणि कल्मषमोषिणि घोषरते।
दनुज—निरोषिणि दुर्मदशोषिणि दुर्मुनिरोषिणि सिन्धुसुते
जय जय हे महिषासुर—मर्दिनि रम्यकपर्दिनि शैलसुते।।२।।
अयि जगदम्ब कदम्बवन—प्रियवासिनि तोषिणि हासरते
शिखरि—शिरोमणि—तुङ्ग—हिमालय—शृङ्ग—निजालय—मध्यगते।
मधु—मधुरे मधु कैटभ—गञ्जिनि महिष—विदारिणि रासरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।३।।
अयि निजहुंकृति—मात्रनिराकृत—धूम्रविलोचन — धूम्रशते
समरविशोषित—रोषित—शोणित—बीजसमुद्भव—बीजलते।
शिव-शिव शुम्भ-निशुम्भ-महाहव-तर्पित—भूत—पिशाचरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।४।।
अयि शतखण्ड—विखण्डित—रुण्ड— वितुण्डित—शुण्ड—गजाधिपते
निजभुजदण्ड- निपातितचण्ड विपाटित—मुण्ड—भटाधिपते।
रिपुगजगण्ड—विदारण—चण्डपराक्रम—शौण्ड—मृगाधिपते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।५।।
धनुरनुषङ्गसुर—रणक्षणसङ्ग—परिस्फुरदङ्ग—नटत्कटके
कनक—पिशङ्ग—पृषत्कनिषङ्ग—रसद्भटशृङ्ग—हताबटुके
हत—चतुरङ्ग—बल—क्षितिरङ्ग—घटद्-बहुरङ्ग—रटद् -बटुके
जय जय हे महिषासुर—मर्दिनि रम्यकपर्दिनि शैलसुते।।६।।
अयि रणदुर्मद—शत्रुवधाद्धुर—दुर्धर— निर्भर— शक्तिभृते
चतुर-विचार-धुरीण -महाशय - दूतकृत-प्रमथाधिपते
दुरित—दुरीह—दुराशय— दुर्मति—दानवदूत—दुरन्तगते
जय जय हे महिषासुर—मर्दिनि रम्यकपर्दिनि शैलसुते।।७।।
अयि शरणागत—वैरिवधूजन— वीरवराभय—दायिकरे
त्रिभुवनमस्तक—शूलविरोधि—शिरोधिकृतामल — शूलकरे
दुमिदुमितामर—दुन्दुभिनाद—मुहुर्मुखरीकृत—दिङ्निकरे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।८।।
सुरललना—ततथेयित—थेयित—थामिनयोत्तर—नृत्यरते
कृतकुकुथा—कुकुथोदि—डदादिक—तालकुतूहल— गानरते।
धुधुकुट—धुधुट—धिन्धि—मितध्वनि—घोरमृदङ्ग —निनादरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।९।।
जय जय जाप्यजये जयशब्द—परस्तुति—तत्पर- विश्वनुते
झणझण-झिंमझिम-झिंकृत-नूपुर- शिञ्जित-मोहित-भूतपते।
नटितनटार्ध- नटीनटनायक-नाटन-नाटित-नाट्यरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१०।।
अयि सुमनः-सुमनः-सुमनः-सुमनः सुमनोरमकान्तियुते
श्रितरजनी-रजनी-रजनी- रजनी- रजनीकर - वक्त्रभृते।
सुनयन-विभ्रमर-भ्रमर-भ्रमर-भ्रमर-भ्रमराभिदृते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।११।।
महित-महाहव-मल्ल-मतल्लिक-वल्लित-रल्लित-भल्लिरते
विरचितवल्लि-कपालिक पल्लिक-झिल्लिक-भिल्लिक-वर्गवृत
श्रुतकृत फुल्ल- समुल्ल सितारुण-तल्लज-पल्लव-सल्ललिते
जय जय हे महिषासुर-मर्दिनि रम्यकपर्दिनि शैलसुते।।१२।।
अयि सुदतीजन-लालस-मानस-मोहन- मन्थरराजसुते
अविरल- अगण्ड- गलन- मदमेदुर- मत्त- मत्तङ्गजराजगते
त्रिभुवन-भूषण-भूत-कलानिधिरूप- पयोनिधि - राजसुते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१३।।
कमल- दलामल- कोमलकान्ति-कलाकलितामल - भालतले
सकल- विलास- कलानिलय- कलाकलिचलत्- कलहंसकुले
अलिकुल-सङ्कुल-कुन्तल-मण्डल-मौलिमिलद्—बकुलालिकुले
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१४।।
करमुरलीरव— वर्जित— कूजित —लज्जित—कोकिल—मञ्जुमते

मिलित–मिलिन्द:–मनोहरगुञ्जित–रञ्जित–शैल– निकुञ्जगते
निजगण–भूतमहा–शबरीगण –रङ्गणसम्भृत –केलिरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।।१५।।
कटितटपीय – दुकूलविचित्र –मयूख–तिरस्कृत –चण्डरुचे
जितकनकाचल – मौलिमदोर्जित-गर्जित-कुञ्जर-कुम्भकुचे।
प्रणत:–सुराऽसुर–मौलिमणि–स्फुरदंशुलसन्नखचन्द्ररुचे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।। १६।।
विजित– सहस्त्रकरैक – सहस्त्रकरैक – सहस्त्रकरैकनुते
कृतसुरतारक – सङ्गतारक – सङ्गतारक – सूनुसुते
सुरथसमाधि – समानसमाधि– समानसमाधि–सुजाप्यरते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।। १७।।
पदकमलं करुणानिलये वरिवस्यति योऽनुदिनं सुशिवे
अयि कमले कमलानिलये कमलानिलय: स कथं न भवेत्।
तव पदमेव परं पदमस्त्विति शीलयतो मम किं न शिवे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ।। १८।।
कनककलसत् – कलशीक जलै रनुषिञ्जति तेऽङ्गणरङ्गभुवं
भजति स किं न शची-कुच -कुम्भ-नटीपरिम्भ–सुखानुभवम
तव चरणं शरणं करवाणि सुवाणि पथं मम देहि शिवं
जय जय हे महिषासुर–मर्दिनि रम्यकपर्दिनि शैलसुते।। १९।।
तव विमलेन्दुकलं वदनेन्दुमलं कलयत्र नुकूलयते
किमु पुरुहूत–पुरीन्दुमुखी– सुमुखीभिरसौ विमुखीक्रियते।
मम तु मतं शिवमानधने भवति कृपया किमु न क्रियते
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।। २०।।
अयि मयि दीनदयालुतया कृपयैव त्वया भवितव्यमुमे
अयि जगतो जननीति यथाऽसि मयाऽसि तथाऽनुमतासि रमे ।
यदुचितमत्र भवत्पुरगं कुरु शाम्भवि देवि दयां कुरु मे
जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते।। २१।।
स्तुतिमिमां स्तिमित: सुसमाधिना, नियमतो यमतोऽनुदिनं पठेत
परमया रमया स निषेव्यते परिजनोऽरिजनोऽपि च तं भजेत।। २२।।

।। इति श्रीसङ्कटा–स्तुति: सम्पूर्णा।।

## भवान्यष्टकम्

न तातो न माता न बन्धुर्न दाता,
न पुत्रो न पुत्री न भृत्यो न भर्ता ।
न जाया न विद्या न वृत्तिर्ममैव
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।१।।
भवाब्धावपारे महादु:खभीरु:
पपात प्रकामी प्रलोभी प्रमत्त:
कुसंसारपाशप्रबद्ध: सदाहं।
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।२।।
न जानामि दानं न च ध्यानयोगं
न जानामि तन्त्रं न च स्तोत्रमन्त्रम् ।
न जानामि पूजां न च न्यासयोगम्।
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।३।।
न जानामि पुण्यं न जानामि तीर्थं
न जानामि मुक्तिं लयं वा कदाचित्
न जानामि भक्तिं व्रतं वापि मात:
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।४।।
कुकर्मी कुसङ्गी कुबुद्धि: कुदास:
कुलाचारहीन: कदाचारलीन:।
कुदृष्टि: कुवाक्यप्रबन्ध: सदाहम्
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।५।।
प्रजेशं रमेशं महेशं सुरेशं
दिनेशं निशीथेश्वरं वा कदाचित्।
न जानामि चान्यत् सदाहं शरण्ये
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।६।।
विवादे विषादे प्रमादे प्रवासे
जले चानले पर्वते शत्रुमध्ये।
अरण्ये शरण्ये सदा मां प्रपाहि
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।७।।
अनाथो दरिद्रो जरारोगयुक्तो
महाक्षीणदीन: सदा जाड्यवक्त्र:।
विपत्तौ प्रविष्ट: प्रणष्ट: सदाहं
गतिस्त्वं गतिस्त्वं त्वमेका भवानि।।८।।

## रुद्राष्टक

नमामीशमीशान निर्वाणरूपं
विभुं व्यापकं ब्रह्म वेदस्वरूपं ।
निजं निर्गुणं निर्विकल्पं निरीहं
चिदाकाशमाकाशवासं भजेऽहं।।१।।
निराकारमोङ्कारमूलं तुरीयं
गिरा ज्ञान गोतीतमीशं गिरीशं ।
करालं महाकाल कालं कृपालं
गुणागार संसारपारं नतोऽहं।।२।।
तुषाराद्रि संकाश गौरं गभीरं
मनोभूत कोटि प्रभा श्री शरीरं ।
स्फुरन्मौलि कल्लोलिनी चारु गंगा
लसद्भालबालेन्दु कण्ठेभुजंगा।।३।।
चलत्कुंडलं भ्रू सुनेत्रं विशालं
प्रसन्नाननं नीलकण्ठं दयालं ।
मृगाधीशचर्माम्बरं मुण्डमालं।
प्रियं शंकरं सर्वनाथं भजामि।।४।।
प्रचण्डं प्रकृष्टं प्रगल्भं परेशं
अखण्डं अजं भानुकोटिप्रकाशं ।
त्रय: शूल निर्मूलनं शूलपाणिं
भजेऽहं भवानीपतिं भावगम्यं।।५।।
कलातीत कल्याण कल्पान्तकारी
सदा सज्जनानन्ददाता पुरारी ।
चिदानंद संदोह मोहापहारी
प्रसीद प्रसीद प्रभो मन्मथारी।।६।।
न यावद् उमानाथ पादारविन्दं
भजंतीह लोके परे वा नराणाम्।
न तावत्सुखं शान्ति सन्तापनाशं
प्रसीद प्रभो सर्वभूताधिवासं।।७।।
न जानामि योगं जपं नैव पूजां
नतोऽहं सदा सर्वदा शंम्भु तुभ्यं ।
जरा जन्म दु:खौघ तातप्यमानं
प्रभो पाहि आपन्नमामीश शंभो।।८।।
रुद्राष्टकमिदं प्रोक्तं विप्रेण हरतोषये।
ये पठन्ति नरा: भक्त्या तेषां शम्भु: प्रसीदति।।९।।

*इति श्रीगोस्वामितुलसीदासकृतं श्रीरुद्राष्टकं सम्पूर्णम्।*

## श्रीकालभैरवाष्टकम्

देवराजसेव्यमानपावनाङ्घ्रिपङ्कजं
व्यालयज्ञसूत्रमिन्दुशेखरं कृपाकरम् ।
नारदादियोगिवृन्दवन्दितं दिगम्बरं
काशिकापुराधिनाथकालभैरवं भजे।। १।।
भानुकोटिभास्वरं भवाब्धितारकं परं
नीलकण्ठमीप्सितार्थदायकं त्रिलोचनम् ।
कालकालमम्बुजाक्षमक्षशूलमक्षरं
काशिकापुराधिनाथकालभैरवं भजे।। २।।
शूलटङ्कपाशदण्डपाणिमादिकारणं
श्यामकायमादिदेवमक्षरं निरामयम् ।
भीमविक्रमं प्रभुं विचित्रताण्डवप्रियं
काशिकापुराधिनाथकालभैरवं भजे।। ३।।
भुक्तिमुक्तिदायकं प्रशस्तचारुविग्रहं
भक्तवत्सलं स्थितं समस्तलोकविग्रहम् ।
विनिक्वणन्मनोज्ञहेमकिङ्किणीलसत्कटिं
काशिकापुराधिनाथकालभैरवं भजे।। ४।।
धर्मसेतुपालकं त्वधर्ममार्गनाशकं
कर्मपाशमोचकं सुशर्मदायकं विभुम् ।
स्वर्णवर्णशेषपाशशोभिताङ्गमण्डलं
काशिकापुराधिनाथकालभैरवं भजे।। ५।।
रत्नपादुकाप्रभाभिरामपादयुग्मकं
नित्यमद्वितीयमिष्टदैवतं निरञ्जनम् ।
मृत्युदर्पनाशनं करालदंष्ट्रमोक्षणं
काशिकापुराधिनाथकालभैरवं भजे।। ६।।
अट्टहासभिन्नपद्मजाण्डकोशसन्ततिं
दृष्टिपातनष्टपापजालमुग्रशासनम् ।
अष्टसिद्धिदायकं कपालमालिकन्धरं
काशिकापुराधिनाथकालभैरवं भजे।। ७।।
भूतसंघनायकं विशालकीर्तिदायकं
काशिवासलोकपुण्यपापशोधकं विभुम्।
नीतिमार्गकोविदं पुरातनं जगत्पतिं
काशिकापुराधिनाथकालभैरवं भजे।। ८।।
कालभैरवाष्टकं पठन्ति ये मनोहरं ज्ञानमुक्तिसाधनं
विचित्रपुण्यवर्धनम्। शोकमोहदैन्यलोभकोपतापनाशनं
ते प्रयान्ति कालभैरवाङ्घ्रिसंनिधिं ध्रुवम्।।

।। श्रीमच्छङ्कराचार्यविरचित कालभैरवाष्टकं सम्पूर्णम्।।

## मधुराष्टकम्

अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम्।।१।।
वचनं मधुरं चरितं मधुरं वसनं मधुरं वलितं मधुरम् ।
चलितं मधुरं भ्रमितं मधुरं मधुराधिपतेरखिलं मधुरम्।।२।।
वेणुर्मधुरो रेणुर्मधुर: पाणिर्मधुर: पादौ मधुरौ।
नृत्यं मधुरं सख्यं मधुरं मधुराधिपतेरखिलं मधुरम्।।३।।
गीतं मधुरं पीतं मधुरं भुक्तं मधुरं सुप्तं मधुरम् ।
रूपं मधुरं तिलकं मधुरं मधुराधिपतेरखिलं मधुरम्।।४।।
करणं मधुरं तरणं मधुरं हरणं मधुरं रमणं मधुरम् ।
वमितं मधुरं शमितं मधुरं मधुराधिपतेरखिलं मधुरम्।।५।।
गुञ्जा मधुरा माला मधुरा यमुना मधुरा वीची मधुरा ।
सलिलं मधुरं कमलं मधुरं धुराधिपतेरखिलं मधुरम्।।६।।
गोपी मधुरा लीला मधुरा युक्तं मधुरं मुक्तं मधुरम् ।
दृष्टं मधुरं शिष्टं मधुरं मधुराधिपतेरखिलं मधुरम्।।७।।
गोपा मधुरा गावो मधुरा यष्टिर्मधुरा सृष्टिर्मधुरा ।
दलितं मधुरं फलितं मधुरं मधुराधिपतेरखिलं मधुरम्।।८।।

।। इति श्रीमद्वाल्लभाचार्यकृतं मधुराष्टकं सम्पूर्णम्।।

# श्रावणकृष्णपक्षः

शक१९४०, संवत्२०७५, सन् १४२६, दक्षिणायनं, उत्तरगोलः, वर्षा ऋतुः वास्तु पुरुष-अग्निकोणे। पश्चिम कालः, शुद्धः ।
दिनांक २८ जुलाई तः ११ अगस्त यावत् सन्२०१८ इ। मार्गी पूर्वोदितः गुरुः। मार्गी पश्चिमोदितः शुक्रः।

| तिथयः | दिनानि | तिथिमानानि द.प. | घं.मि. | नक्षत्र | द.प. | घं.मि. | योगाः | द.प. | करण द.प. | चन्द्रराशयः राशिः द.प. | समाप्तिकालः घ.मि. | राश्यादिस्पष्टसूर्यः | दिनमानं द.प. | सूर्योदयः घं.मि. | सूर्यास्तः घं.मि. | रा. | ने. | अं. | विवरण |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | श. | ५३।२३ | रा.२।४० | श्रवण | ५४।५६४ | रा.३।१७ | प्रीति | १८।४६ | बालव २०।५४ | मकर | अहोरात्रं | ३।१०।५९।२७ | ३३।२३ | ५।१९ | ६।४१ | ६ | १२ | २८ | श्रावणेवर्जयेच्छाकम्। मैथिल नववर्षारम्भः। गायत्री जपम्। पञ्चकारम्भः(भदवा) रा.३।१७ उ.। शिववासः, अग्निवासः, पूर्वाविनायात्रा, अमृतयोगः, सर्वार्थसिद्धियोगःरा.३।१७ या. ततः द्विपुष्करयोगः। |
| २ | र. | ५७।५१ | रा.४।२८ | धनिष्ठा | ६०।०० | अहोरात्रं | आयुष्यमान | २०।१२ | तैतिल २५।३७ | मकर ३०।२७ | दि.१२।२३ | ३।११।५६।३७ | ३३।२० | ५।२० | ६।४० | ७ | १३ | २९ | अशून्यशयन२ व्रतं,श्रीलक्ष्मीयुतंविष्णुं पर्यके पूजनात् अक्षय धनदाम्पत्य सुखप्राप्तिः। प्रार्थनामन्त्रः-पत्नीं भर्तृवियोग च भर्तामार्या समुद्भवं नान्नुवर्तिक्तयथा दुःख दाम्पत्यानि तथा कुरु। अग्निवासः, पूर्वयात्रा दि.१२।२३ या.। ← |
| ३ | चं. | ६०।०० | अहोरात्रं | धनिष्ठा | ००।५४ | प्रा.५।४१ | सौभाग्य | २१।०९ | वणिज् २९।४३ | कुम्भ | अहोरात्रं | ३।१२।५३।४७ | ३३।१७ | ५।२० | ६।४० | ८ | १४ | ३० | सोमवासरव्रतं, गृहारम्भः। पश्चिमयात्रा प्रा.५।४१ या.। भद्रा२६।४३ उ.। ♍ सर्वार्थसिद्धियोगः अहोरात्रं, आश्लेषायां रविः ४४।०२ रा.११।००। स्त्री.पु.चं.चं. योगो जम्बूकवाहनं वातनाड़ी तदीशो रविः सुवृष्टियोगः। |
| ३ | मं. | १।३५ | प्रा.५।५८ | शतभिषा | ०९।०८ | दि.७।४८ | शोभन | २१।२६ | भद्रा १।३५ | कुम्भ ५४।१३ | रा.३।०१ | ३।१३।५०।५७ | ३३।१४ | ५।२१ | ६।३९ | ९ | १५ | ३१ | श्रीगणाधिप ४ व्रतं, भौमव्रतम्। दुर्गायात्रा गौरीपूजा-हनुमद्दर्शनम्। शिववासः-अग्निवासः प्रा.५।५८ उ.। पश्चिमयात्रा दि.७।४८ उ.। भद्रा १।३५या.। सिद्धियोगः प्रा.५।५८या.ततः राज्यप्रदयोगः। ←सिद्धियोगः रा.४।२८ उ.। |
| ४ | बु. | ४।०९ | दि.७।०२ | पू.भा. | १०।१५ | दि.९।२८ | अतिगण्ड | २०।४७ | बालव ४।०९ | मीन | अहोरात्रं | ३।१४।४८।०७ | ३३।११ | ५।२२ | ६।३८ | १० | १६ | १ | अगस्त ८। शिववासः,अग्निवासः दि.७।०२ या.। पश्चिमयात्रा दि.६।२८ या.। कन्यायां शुक्र दि.१०।२२। |
| ५ | गु. | ५।३८ | दि.७।३७ | उ.भा. | १३।४६ | दि.१०।५२ | सुकर्मा | १९।१४ | तैतिल ५।३८ | मीन | अहोरात्रं | ३।१५।४५।१६ | ३३।०८ | ५।२२ | ६।३८ | ११ | १७ | २ | मौना५, नागपंचमी५, मनसादेवीपूजन-मुत्थापनञ्च। मधुश्रावणीपूजारम्भः। हरदेवीपूजा(जयपुरं)। द.ति.दि.७।३७ उ.। शिववासः दि.७।३७ या.ततः अग्निवासः। पश्चिम-उत्तरयात्रा-रवियोगः-सर्वार्थसिद्धियोगः दि.१०।५२उ ◆ |
| ६ | शु. | ५।४७ | दि.७।४२ | रेवती | १४।५८ | दि.११।२२ | धृति | १६।३८ | वणिज् ५।३७ | मीन १४।५८ | दि.११।२२ | ३।१६।४२।२४ | ३३।०६ | ५।२३ | ६।३७ | १२ | १८ | ३ | द.ति दि.७।४२या.। पञ्चक(भदवा)समाप्तिः दि.११।२२ या.। अग्निवासः दि.७।४२ या.। पश्चिमांविनायात्रा दि.११।२२ उ.। भद्रा५।४७ तः ३५।१३ या.। रवियोगः दि.११।२२ या.। सिद्धियोगःदि.७।४२ या.ततः मृत्युयोगः।♍ |
| ७ | श. | ४।४० | दि.७।१५ | अश्विनी | १५।२७ | दि.११।३४ | शूल | १३।०१ | बव ४।४० | मेष | अहोरात्रं | ३।१७।३९।३३ | ३३।०३ | ५।२३ | ६।३७ | १३ | १९ | ४ | श्रीशीतलासप्तमीव्रत(मध्याह्ने)। शिववासः-अग्निवासः दि.७।१५ उ.। पूर्वां विना यात्रा दि.११।३४ या.। रवियोगः दि.११।३४ या.। ◆सिद्धियोगः दि.७।३७ या.। |
| ८ | र. | २।२० | प्रा.६।२० | भरणी | १४।४५ | दि.११।१८ | गण्ड | ०८।२९ | कौलव २।२० | मेष २६।२६ | दि.५।१२ | ३।१८।३६।५७ | ३३।०० | ५।२४ | ६।३६ | १४ | २० | ५ | नवमीतिथिमानं ५६।३७ रा.४।०३। इन्द्रसावर्णिमन्वादिः, शिववासः-सिद्धियोगः प्रा.६।२० या.। |
| १० | चं. | ५४।४१ | रा.३।१६ | कृत्तिका | १३।०२ | दि.१०।३७ | वृद्धि | ०३।०६ | वणिज् २६।४६ | वृष | अहोरात्रं | ३।१९।३४।०६ | ३२।५७ | ५।२४ | ६।३६ | १५ | २१ | ६ | ध्रुवयोगमानं ५३।५६। सोमवासरव्रतम्। अग्निवासः, दक्षिणयात्रा दि.१०।३७ उ.। भद्रा ३६।४९ तः ५४।४१ या.। अमृतयोगः रा.३।१६ या. ततः सिद्धियोगः। सर्वार्थसिद्धियोगः दि.१०।३७ उ.। |
| ११ | मं. | ४९।३५ | रा.१।१५ | रोहिणी | १०।२७ | दि.९।३६ | व्याघात (ध्रुव ५३।५६) | ५०।१९ | बव २२।०८ | वृष ३८।५० | रा.८।५७ | ३।२०।३१।२७ | ३२।५४ | ५।२५ | ६।३५ | १६ | २२ | ७ | कामदाएकादशी ११ व्रतं सर्वेषाम्। भौमव्रतं, दुर्गायात्रा गौरीपूजा-हनुमद्दर्शनम्। शिववासः। द्विपुष्करयोगः रा.१।१५ उ.। मृत्युयोगः रा.१।१२ या. ततः अमृतयोगः। |
| १२ | बु. | ४३।५८ | रा.११।०१ | मृगशिरा | ०७।१२ | दि.८।१९ | हर्षण | ४३।०८ | कौलव १६।४६ | मिथुन | अहोरात्रं | ३।२१।२८।४४ | ३२।५१ | ५।२६ | ६।३४ | १७ | २३ | ८ | दूर्वादलेन पारणं, शिववासः, अग्निवासः, उत्तरां विना यात्रा दि.८।१६ या.। सिद्धियोगः रा.११।०१ या. ततः मृत्युयोगः। सर्वार्थसिद्धियोगः दि.८।१६ या.। |
| १३ | गु. | ३७।५७ | रा.८।३७ | आर्द्रा | ०३।२६ | दि.६।४८ | वज्र | ३५।३६ | गर १०।५८ | मिथुन ४४।३० | रा.११।१४ | ३।२२।२६।०१ | ३२।४८ | ५।२६ | ६।३४ | १८ | २४ | ९ | पुनर्वसुनक्षत्रमानं५५।५४ रा.३।४८। प्रदोष१३-१४ व्रतं। अग्निवासःरा.८।३७ उ.। पश्चिमायात्रा दि.६।४८ उ। भद्रा ३७।५७ उ। गुरुपुष्ययोगःरा.३।४८ उ। अमृतयोगःरा.८।३७ या.ततः मृत्युयोगः। सर्वार्थसिद्धियोगःदि.६।४८उ। |
| १४ | शु. | ३१।४८ | सा.६।१० | पुष्य | ५५।०६ | रा.३।२९ | सिद्धि | २७।५७ | भद्रा ४।५३ | कर्क | अहोरात्रं | ३।२३।२३।१८ | ३२।४४ | ५।२७ | ६।३३ | १९ | २५ | १० | अग्निवासः सा.६।१० या.। पश्चिमां विना यात्रा रा.३।२६ या.। भद्रा ४।५३ या.। अमृतयोगः सा.६।१० या.। |
| ३० | श. | २५।३५ | दि.३।४२ | आश्लेषा | ५१।०१ | रा.१।५२ | व्यतीपात् | २०।१९ | नाग २५।३५ | कर्क ५१।०१ | रा.१।५२ | ३।२४।२०।३५ | ३२।४० | ५।२८ | ६।३२ | २० | २६ | ११ | श्रावणी३०,अमावस्या स्नानदान-श्राद्धादौ। पापवारान्वितेदर्शे दुर्भिक्षं च प्रजाभयं, देवसावर्णिमन्वादिः,शिववासः दि.३।४२ या.। |

## मिश्रमानकालिकदैनिकमंगलादिस्पष्टग्रहाः दिनद्वयग्रहान्तरं गतिश्च

| तिथि दिन | वक्री भौम राश्यादि | बुध वक्री राश्यादि | गुरु राश्यादि | शुक्रः राश्यादि | वक्री शनि राश्यादि | केतु राश्यादि | मिश्रमानं |
|---|---|---|---|---|---|---|---|
| १ श. | ९।०४।३६।३६ | ३।१८।५५।३० | ६।२०।५२।५६ | ४।२६।२८।४६ | ८।०६।४२।२८ | ९।१३।५७।१७ | ४६।४२ |
| २ र. | ९।०४।२१।१५ | ३।१८।०९।४६ | ६।२०।५६।४१ | ४।२७।३०।१९ | ८।०६।३९।०९ | ९।१३।५४।०६ | ४६।४० |
| ३ चं. | ९।०४।०२।५१ | ३।१७।२४।०२ | ६।२१।००।२६ | ४।२८।३१।५२ | ८।०६।३५।५० | ९।१३।५०।५५ | ४६।३८ |
| ३ मं. | ९।०३।५०।२७ | ३।१६।३८।१८ | ६।२१।०४।११ | ४।२९।३३।२५ | ८।०६।३२।३१ | ९।१३।४७।४४ | ४६।३६ |
| ४ बु. | ९।०३।३५।०३ | ३।१५।५२।३४ | ६।२१।०७।५६ | ५।००।३४।५८ | ८।०६।२९।१२ | ९।१३।४४।३३ | ४६।३५ |
| ५ गु. | ९।०३।१९।४० | ३।१५।०६।५१ | ६।२१।११।४१ | ५।०१।३६।३१ | ८।०६।२५।५३ | ९।१३।४१।२२ | ४६।३४ |
| ६ शु. | ९।०३।०४।१७ | ३।१४।२१।०८ | ६।२१।१५।२७ | ५।०२।३८।०४ | ८।०६।२२।३४ | ९।१३।३८।१२ | ४६।३३ |
| ७ श. | ९।०२।४८।५५ | ३।१३।३५।२५ | ६।२१।१९।१३ | ५।०३।३९।३६ | ८।०६।१९।१७ | ९।१३।३५।०२ | ४६।३१ |
| ८ र. | ९।०२।३७।०५ | ३।१३।२२।४० | ६।२१।२३।५४ | ५।०४।३८।५३ | ८।०६।१६।२९ | ९।१३।३१।५१ | ४६।२९ |
| १० चं. | ९।०२।२५।१५ | ३।१३।०९।५५ | ६।२१।२८।३५ | ५।०५।३८।०९ | ८।०६।१३।४१ | ९।१३।२८।४० | ४६।२७ |
| ११ मं. | ९।०२।१३।२६ | ३।१२।५७।१० | ६।२१।३३।१५ | ५।०६।३७।२५ | ८।०६।१०।५४ | ९।१३।२५।२९ | ४६।२५ |
| १२ बु. | ९।०२।०१।३७ | ३।१२।४४।२५ | ६।२१।३७।५५ | ५।०७।३६।४१ | ८।०६।०८।०७ | ९।१३।२२।१८ | ४६।२४ |
| १३ गु. | ९।०१।४९।४८ | ३।१२।३१।४० | ६।२१।४२।३५ | ५।०८।३५।५७ | ८।०६।०५।२० | ९।१३।१९।०७ | ४६।२३ |
| १४ शु. | ९।०१।३७।५९ | ३।१२।१८।५५ | ६।२१।४७।१५ | ५।०९।३५।१३ | ८।०६।०२।३३ | ९।१३।१५।५६ | ४६।२२ |
| ३० श. | ९।०१।२६।१० | ३।१२।०६।११ | ६।२१।५१।५५ | ५।१०।३४।२६ | ८।०५।५९।४६ | ९।१३।१२।४७ | ४६।२० |

## दैनिकलग्नसारणी चक्रम्

| तिथि, दिन | मे.अं. घं.मि. | वृ.अं. घं.मि. | मि.अं. घं.मि. | क.अं. घं.मि. | सिं.अं. घं.मि. | कं.अं. घं.मि. | तु.अं. घं.मि. | वृ.अं. घं.मि. | ध.अं. घं.मि. | म.अं. घं.मि. | कु.अं. घं.मि. | मी.अं. घं.मि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ श. | ०।२३ | २।१९ | ४।३२ | ६।५० | ९।०६ | ११।२१ | १३।३८ | १५।५५ | १८।०० | १९।४६ | २१।१७ | २२।४६ |
| २ र. | ०।१९ | २।१५ | ४।२८ | ६।४६ | ९।०२ | ११।१७ | १३।३४ | १५।५१ | १७।५६ | १९।४२ | २१।१३ | २२।४२ |
| ३ चं. | ०।१५ | २।११ | ४।२४ | ६।४२ | ८।५८ | ११।१३ | १३।३० | १५।४७ | १७।५२ | १९।३८ | २१।०७ | २२।३८ |
| ३ मं. | ०।११ | २।०७ | ४।२० | ६।३८ | ८।५४ | ११।०९ | १३।२६ | १५।४३ | १७।४८ | १९।३४ | २१।०५ | २२।३४ |
| ४ बु. | ०।०७ | २।०३ | ४।१६ | ६।३४ | ८।५० | ११।०५ | १३।२२ | १५।३९ | १७।४४ | १९।३० | २१।०१ | २२।३० |
| ५ गु. | ०।०४ | १।०० | ४।१३ | ६।३१ | ८।४७ | ११।०२ | १३।१९ | १५।३६ | १७।४१ | १९।२७ | २०।५७ | २२।२७ |
| ६ शु. | ०।०० | १।५६ | ४।०९ | ६।२७ | ८।४३ | १०।५८ | १३।१५ | १५।३२ | १७।३७ | १९।२३ | २०।५४ | २२।२३ |
| ७ श. | २३।५६ | १।५२ | ४।०५ | ६।२३ | ८।३९ | १०।५४ | १३।११ | १५।२८ | १७।३३ | १९।१९ | २०।५० | २२।१९ |
| ८ र. | २३।५२ | १।४८ | ४।०१ | ६।१९ | ८।३५ | १०।५० | १३।०९ | १५।२४ | १७।२९ | १९।१५ | २०।४६ | २२।१५ |
| १० चं. | २३।४८ | १।४५ | ३।५८ | ६।१६ | ८।३२ | १०।४७ | १३।०४ | १५।२१ | १७।२६ | १९।१२ | २०।४३ | २२।१२ |
| ११ मं. | २३।४५ | १।४१ | ३।४५ | ६।१२ | ८।२८ | १०।४३ | १३।०० | १५।१७ | १७।२२ | १९।०८ | २०।३७ | २२।०८ |
| १२ बु. | २३।४१ | १।३७ | ३।५० | ६।०८ | ८।२४ | १०।३९ | १२।५६ | १५।१३ | १७।१८ | १९।०४ | २०।३५ | २२।०४ |
| १३ गु. | २३।३७ | १।३३ | ३।४६ | ६।०४ | ८।२० | १०।३५ | १२।५२ | १५।०९ | १७।१४ | १९।०० | २०।३१ | २२।०० |
| १४ शु. | २३।३३ | १।२९ | ३।४२ | ६।०० | ८।१६ | १०।३१ | १२।४८ | १५।०५ | १७।१० | १८।५६ | २०।२७ | २१।५६ |
| ३० श. | २३।२९ | १।२५ | ३।३८ | ५।५६ | ८।१२ | १०।२७ | १२।४४ | १५।०१ | १७।०६ | १८।५२ | २०।२३ | २१।५२ |

## दैनिक अर्धप्रहरा

| तिथि, दिन | | दिन का अर्धप्रहरा घण्टा मिनट | रात का अर्धप्रहरा घण्टा मिनट |
|---|---|---|---|
| १ | श. | दि.५:१९-६:५९। दि.१:३९-३:१९। दि.४:५९-६:४० | सा.६:४१-८:०४। रा.१:२१-२:४१। रा.४:०१-५:२० |
| २ | र. | दि.१०:२०-१:४०। | रा.१०:४०-१२:००। रा.१:२०-२:४० तक |
| ३ | चं. | दि.७:०१-८:४१। दि.३:२१-५:००। | रा.१०:४१-१२:०१। रा.२:४१-४:०१। |
| ३ | मं. | दि.७:०२-८:४२। दि.१:४१-३:२०। | रा.८:०१-९:२१ तक |
| ४ | बु. | दि.८:४२-१०:२२। दि.१२:०२-१:४१। | रा.१२:०१-१:२१। रा.२:४१-४:०१ तक। |
| ५ | गु. | दि.३:१९-६:३७। | रा.१२:०१-०१:२१। रा.४:०२-५:२२ तक। |
| ६ | शु. | दि.८:४३-१२:०१। | रा.९:२२-१०:४२ तक। |
| ७ | श. | प्र.५:२४-७:०३। दि.१:३९-३:१८। दि.४:५७-६:३६। | सा.६:३७-७:५७। रा.१:१७-२:३७। रा.४:२-५:२२ |
| ८ | र. | दि.१०:२२-१:४०। | रा.९:१७-१०:३६। रा.१:१६-२:३६ तक। |
| १० | चं. | दि.७:०५-८:४४। दि.३:१२-४:५६। | रा.१०:४२-१२:४। रा.२:४८-४:१० तक। |
| ११ | मं. | दि.७:५-८:४४। दि.१:४०-३:१८। | रा.७:५७-९:१९ तक। |
| १२ | बु. | दि.८:४५-१०:२३। दि.१२:१-१:३९। | रा.१२:०२-१:२२। रा.२:४७-४:०८ तक। |
| १३ | गु. | दि.३:१७-६:३३। | रा.१२:०२-१:२२। रा. ४:०४-५:२७ तक। |
| १४ | शु. | दि.८:४४-१२:००। | रा.९:१७-१०-३९ तक। |
| ३० | श. | दि.५:२९-७:७ दि.१:३९-३:१७। दि.४:५४-६:३१ | सा.६:३३-७:५५। रा.१:२३-२:४५। रा.४:०७-५:२८ |

**मूलविचारः-रेवती/अश्विनी**-ति.५ गुरु दि.१०।५२ से ति.७ शनि दि.११।३४ यावत्। आश्लेषा-ति.१४ शुक्रवार रा.३।२६ से।

### रुद्राभिषेक में विशेष द्रव्य विचार-

ज्वरप्रकोपशान्त्यर्थं जलधारा शिवप्रिया।। घृतधारा शिवे कार्या यावन्मन्त्रसहस्रकम्। तदा वंशस्य विस्तारो जायते नात्र संशयः।। प्रमेहरोगशान्त्यर्थं प्राप्नुयान्मानसेप्सितम्। केवलं दुग्धधारा च तदा कार्या विशेषतः।। शर्करामिश्रिता तत्र यदा बुद्धिर्जडा भवेत्। श्रेष्ठा बुद्धिर्भवेत्तस्य कृपया शंकरस्य च।। सार्षपेणैव तैलेन शत्रुनाशो भवेदिह। मधुना यक्ष्मराजोऽपि गच्छेद्वै शिवपूजनात्।। पापक्षयार्थी मधुना निर्व्याधिः सर्पिषा तथा। जीवनार्थी तु पयसा श्रीकामीक्षुरसेन वै।। पुत्रॉर्थी शर्करायास्तु रसेनार्चेच्छिवं तथा। महालिंगाभिषेकेण सुप्रीतः शंकरो मुदा।। कुर्याद्विधानं रुद्राणं यजुर्वेदविनिर्मितम्।।

### बिल्वाष्टकम्-

त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रयायुधम्।
त्रिजन्मपापसंहारं विल्वपत्रं शिवार्पणम।।१।।
त्रिशाखैर्विल्व पत्रैश्च ह्यच्छिद्रैः कोमलैः शुभैः।
शिवपूजां करिष्यामि विल्वपत्रं शिवार्पणम्।।२।।
अखण्डबिल्वपत्रेण पूजिते नन्दिकेश्वरे।
शुद्धयन्ति सर्वपापेभ्यो विल्वपत्रं शिवार्पणम्।।३।।
शालिग्रामशिलामेकां विप्राणां जातु अर्पयेत्।
सोमयज्ञमहापुण्यं विल्वपत्रं शिवार्पणम्।।४।।
दन्तिकोटि-सहस्राणि वाजपेयशतानि च।
कोटिकन्यामहादानं विल्वपत्रं शिवार्पणम्।।५।।
लक्ष्म्याः स्तनत उत्पंत्रं महादेवस्य च प्रियम्।
विल्ववृक्षं प्रयच्छामि विल्वपत्रं शिवार्पणम्।।६।।
दर्शनं बिल्ववृक्षस्य स्पर्शनं पापनाशनम्।
अघोरपापसंहारं विल्वपत्रं शिवार्पणम्।।७।।
मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अग्रतः शिवरूपाय विल्वपत्रं शिवार्पणम्।।८।।
विल्वाष्टकमिदं पुण्यं यः पठेच्छिवसन्निधौ।
सर्वपापविनिर्मुक्तः शिवलोकमवाप्नुयात्।।९।।

१ शनौ वल्ली ८।३६।२४।२३ अयनांशाः २२।४७।२०




७ शनी वल्ली ८।३६।२४।३० अयनांशाः २२।४७।२१




३० शनौ वल्ली ८।३६।२४।३७ अयनांशाः २२।४७।२१




**विविधः**—श्रावणकृष्णपञ्चम्यां मनसादेव्याः उत्थापनं पूजनञ्च कार्यम्। सोमवारव्रतं-सोमवारे व्रतं कार्यं श्रावणे वै यथाविधि। शक्तावुपोषणं कार्यमथवा निशिभोजनम्।

**पञ्चम्यां नाग पूजनं**—श्रावणे मासि पञ्चम्यां कृष्णपक्षेऽथवा सिते। द्वारस्योभयतो लेख्यो गोमयेन विषोल्वणः। पूजयेद्विधिवद्वीर दधि दूर्वांकुरैः कुशैः। गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः । ये त्वस्यां पूजयन्तीह नागान् भक्तिपुरस्सराः। तेषां सर्पतो वीर भयं भवति कुत्रचित्।

**पञ्चम्यां**-तिक्ताम्लरससेवनं पुष्टिकरं। **शकुनम्- श्रावणशुक्लपञ्चम्यां** दक्षिणपश्चिमवायौ दुर्भिक्षमन्यथा **शुभिक्षम्**। नभसि शुक्ल दलेऽचलेसंज्ञके रवितिथावुदयो । रविचन्द्रयोः । भवति चेज्जलदैरिह संवृता वसुमती जलदा बहुतोयदाः।

# श्रावणशुक्लपक्षः

शक१९४०, संवत्२०७५, सन् १४२६, दक्षिणायनं, उत्तरगोलः, वर्षा ऋतुः वास्तु पुरुष-अग्निकोणे ता.१७ तः ईशानकोणे।
पश्चिमे कालः ता.१७ तः उत्तरे, । शुद्धः ता १७ तः अशुद्धः। दिनांक १२ अगस्त तः २६ यावत् सन्२०१८ ई। मार्गी पूर्वोदितः गुरुः। मार्गी पश्चिमोदितः शुक्रः।

| तिथयः | दिनानि | तिथिमानानि द. प. | घं. मि. | नक्षत्राणि | समा.कालः द. प. | घं. मि. | योगाः | समा.कालः द. प. | करणानि | द. प. | चन्द्रराशयः राशिः द. प. | सञ्चारिकालः घ. मि. | स्पष्टसूर्यः राश्यादि | दिनमानं द. प. | सूर्योदयः घं. मि. | सूर्यास्तः घं. मि. | रा. | दिनांक ने. | दिनांक अं. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | र. | १९।३९ | दि.१।२१ | मघा | ४७।१४ | रा.१२।२३ | वरीयान् | १२।५० | बव | १९।३९ | सिंह | अहोरात्रं | ३।२५।१८।०५ | ३२।३७ | ५।२९ | ६।३१ | २१ | २७ | १२ |
| २ | चं. | १४।०६ | दि.११।०६ | पू.फा. | ४३।५८ | रा.११।०४ | परिघ (शिव ५३।१८) | ०५।३७ | कौलव | १४।०६ | सिंह ५८।२० | रा.४।४९ | ३।२६।१५।३५ | ३२।३४ | ५।२९ | ६।३१ | २२ | २८ | १३ |
| ३ | मं. | ०९।१० | दि.९।१० | उ.फा. | ४१।२४ | रा.१०।०४ | सिद्ध | ५२।५३ | गर | ९।१० | कन्या | अहोरात्रं | ३।२७।१३।०५ | ३२।३१ | ५।३० | ६।३० | २३ | २९ | १४ |
| ४ | बु. | ०५।०३ | दि.७।३१ | हस्त | ३९।४१ | रा.९।२२ | साध्य | ४७।३१ | भद्रा | ५।०३ | कन्या | अहोरात्रं | ३।२८।१०।३४ | ३२।२८ | ५।३० | ६।३० | २४ | ३० | १५ |
| ५ | गु. | ०१।५२ | प्रा.६।१६ | चित्रा | ३८।५९ | रा.९।०७ | शुभ | ४३।०० | बालव | १।५२ | कन्या ८।४१ | दि.९।२३ | ३।२९।०८।०३ | ३२।२५ | ५।३१ | ६।२९ | २५ | ३१ | १६ |
| ७ | शु. | ५८।४८ | रा.शे५।०३ | स्वाती | ३९।२८ | रा.९।१९ | शुक्ल | ३९।४४ | गर | २९।१६ | तुला | अहोरात्रं | ४।००।०५।३२ | ३२।२२ | ५।३२ | ६।२८ | २६ | १ | १७ |
| ८ | श. | ५९।०६ | रा.शे५।१२ | विशाखा | ४१।११ | रा.१०।०० | ब्रह्म | ३६।५४ | भद्रा | २८।५९ | तुला २५।४५ | दि.३।५० | ४।०१।०३।०१ | ३२।१८ | ५।३२ | ६।२८ | २७ | २ | १८ |
| ९ | र. | ६०।०० | अहोरात्रं | अनुराधा | ४४।१० | रा.११।१३ | ऐन्द्र | ३५।२२ | बालव | ३०।०३ | वृश्चिक | अहोरात्रं | ४।०२।००।४१ | ३२।१५ | ५।३३ | ६।२७ | २८ | ३ | १९ |
| ९ | चं. | ००।५७ | प्रा.५।५६ | ज्येष्ठा | ४८।१६ | रा.१२।५२ | वैधृति | ३४।४० | कौलव | ००।५७ | वृश्चिक४८।१६ | रा.१२।५२ | ४।०२।५८।२१ | ३२।१२ | ५।३४ | ६।२६ | २९ | ४ | २० |
| १० | मं. | ३।४२ | दि.७।०३ | मूल | ५३।२८ | रा.२।५७ | विष्कुम्भ | ३४।५५ | गर | ३।४२ | धनु | अहोरात्रं | ४।०३।५६।०१ | ३२।०९ | ५।३४ | ६।२४ | ३० | ५ | २१ |
| ११ | बु. | ७।३६ | दि.८।३७ | पू.षा. | ५९।२६ | रा.शे५।२१ | प्रीति | ३५।५० | भद्रा | ७।३६ | धनु १६।०३ | दि.१२।०० | ४।०४।५३।४१ | ३२।०६ | ५।३५ | ६।२५ | ३१ | ६ | २२ |
| १२ | गु. | १२।१४ | दि.१०।२९ | उ.षा. | ६०।०० | अहोरात्रं | आयुष्मान | ३७।१२ | बालव | १२।१४ | मकर | अहोरात्रं | ४।०५।५३।४१ | ३२।०३ | ५।३५ | ६।२५ | १ | ७ | २३ |
| १३ | शु. | १७।१९ | दि.१२।३२ | उ.षा. | ०५।५३ | दि.७।५७ | सौभाग्य | ३८।४६ | तैतिल | १७।१९ | मकर | अहोरात्रं | ४।०६।४९।०१ | ३२।०० | ५।३६ | ६।२४ | २ | ८ | २४ |
| १४ | श. | २२।२२ | दि.२।३४ | श्रवण | १२।२३ | दि.१०।३४ | शोभन | ४०।११ | वणिज् | २२।२२ | मकर४५।२६ | रा.११।४७ | ४।०७।४६।४२ | ३१।५६ | ५।३७ | ६।२३ | ३ | ९ | २५ |
| १५ | र. | २६।५७ | दि.४।२५ | धनिष्ठा | १८।२९ | दि.१।०२ | अतिगण्ड | ४१।११ | बव | २६।५७ | कुम्भ | अहोरात्रं | ४।०८।४४।३६ | ३१।५२ | ५।३८ | ६।२२ | ४ | १० | २६ |

- २७/१२ — दोलोत्सवारम्भः(झूलन)। चन्द्रदर्शनम्। मु.३० समासमताकरं, सौम्यश्रृंग सुभिक्षकरम्। अग्निवासः, शिववासः दि.१।२१ उ.। मृत्युयोगः दि.१।२१ या.।
- २८/१३ — शिवयोगमानं ५३।१८। **धर्मसम्राट स्वामीकरपात्रि जयन्ती।** सोमवासरव्रतम्। शिववासः दि.११।०६ या.। रवियोगः **रा.११।०४** उ.। मृत्युयोगः दि.११।०६ या. ततः उत्तरयात्रा। मीनचालनम्।
- २९/१४ — **मधुश्रावणीव्रतसमाप्तिः।** स्वर्णगौरी व्रतं, श्रीगणेश ४ व्रतं, अग्निवासः, भद्रा ३७।०१ उ.। रवियोगः रा.१०।०४ **या.। सिद्धियोगः** दि.६।१० या. ततः राज्यप्रयोगः। हलप्रवहणम्।
- ३०/१५ — गृहप्रवेशः चित्रायां रा.६।२२ उ.। **भारतीय स्वतन्त्रतादिवसः७२ तमः।** शिववासः दि.७।३१ उ., पूर्व-दक्षिणयात्रा। भद्रा ५।०३ या.। रवियोगः रा.६।२२ उ.। सर्वार्थसिद्धियोगः रा.६।२२ या.। हलप्रवहण, बीजवपनम्।
- ३१/१६ — मासान्तः। षष्ठीतिथिमानं५७।५२रा.४।४०। **नागपञ्चमी** नागपूजनं, लघुपद्मनामा नागराजो स्वेतवर्णो द्वारमुभयतः **गोमयनिर्मिता नागाः** सिन्दूरदुर्वापुष्पलाजादिभिः पूज्या। **ऋग्वेदिनामुपाकर्म(श्रावणी)।** शिववासः, अग्निवासः ◆
- १/१७ — संक्रान्तिः। शीतला ७, श्रीशीतलापूजनं। गोस्वामी तुलसीदास जयन्ती। **मघायां सिंहे च रविः ४४।५९ रा.६।३०। विष्णुपदीसंक्रान्तिपुण्यकालः दि.१२।०० उपरि। मु.१५ जघन्यामर्घताकरम्।** ←
- २/१८ — मासादिः। अग्निवासः, पश्चिम-उत्तरयात्रा रा.१०।०० उ.। भद्रा २८।५९ या.। ← **स्त्री.स्त्री च.सू.योगो मूषकवाहनं वातनाशी तथैशो रवि वर्तुंवृष्टियोगः। नेपाली भाद्रमासारम्भः। अशुद्धारम्भः। वास्तुपुरुष ईशानकोणे।**
- ३/१९ — **भाद्रीरविव्रतारम्भः।** शिववासः, अग्निवासः, उत्तरयात्रा, रवियोगः रा.१२।५२ उ.। दग्धतिथि प्रा.५।५६ उ। **उत्तरे कालारम्भः।** भद्रा २८।१८ उ.। मृत्युयोगः रा.शे.५।०२ या.।
- ४/२० — सोमवासरव्रतं, शिववासः-अग्निवासः प्रा.५।५६ या.। पश्चिम-उत्तरयात्रा। रवियोगः अहोरात्रं, अमृतयोगः प्रा.५।५६ उ.। दग्धतिथि दि.७।०३या.।
- ५/२१ — भौमव्रतं, दुर्गायात्रा-गौरीपूजा। पूर्वयात्रा दि.७।०३ या. ततः अग्निवासः। भद्रा३५।३९ उ.। रवियोगः रा.२।५७ या.। मृत्युयोगः दि.७।०३ उ.। हलप्रवहणम्।
- ६/२२ — **पुत्रदाएकादशी ११ व्रतं सर्वेषां।** पञ्चदिनात्मकदोलोत्सवारम्भः। शिववासः-अग्निवासः दि.८।३७ उ.। पूर्वयात्रा, दक्षिणयात्रा दि.१२।०० उ.। भद्रा ७।३६ या.। अमृतयोगः दि.८।३७ या. ततः सिद्धियोगः। मीनचालनं,मुकदमा।
- ७/२३ — दूर्वादलेनपारणम्। श्रीधर१२। **प्रदोष१३** व्रतं, शिववासः, अग्निवासः दि.१०।२९ उ.। अमृतयोगः दि.१०।२९ उ.। हलप्रवहणं,बीजवपनं,वृक्षारोपणं,**विपणि,**मीनचालनं, मुकदमा।
- ८/२४ — प्रदोष १४ व्रतं, शिववासः-अग्निवासः दि.१२।३२ या.। अमृतयोगः दि.१२।३२ उ.। रवियोगः-**सर्वार्थसिद्धियोगः दि.७।५७** उ.। पश्चिम विना यात्रा दि.७।५७ उ.। हलप्रवहणं,बीजवपनं,धान्यछेदनं,वृक्षारोपण,विपणि,मुकदमा।
- ९/२५ — व्रताथी पूर्णिमा। अग्निवासः दि.२।३४ या.। पूर्वा विनायात्रा-सिद्धियोगः-राज्यप्रयोगश्च दि.२।३४ या. ततः मृत्युयोगः। रवियोगः-सर्वार्थसिद्धियोगः दि.१०।३४ या। **पञ्चकारम्भः(भदवा) दि.१०।३४ उ।** भद्रा२२।२२ ततः...
- १०/२६ — श्रावणी१५ पूर्णिमा,स्नानदानादि,उपाकर्म, **रक्षाबन्धनं सूर्योदयात्, संस्कृतदिवसः** दोलोत्सवान्तः, हयग्रीवावतारः। **भाद्रीरविव्रतं,** शिववासः दि.४।२५ उ.। अमृतयोगः दि.४।२४ या. ततः मृत्युयोगः।

◆ पूर्व यात्रा दि.६।२३ या. ततः पश्चिमयात्रा। रवियोगः रा.६।०७ या.। सिद्धियोगः प्रा.६।१६ या.। हलप्रवहण, बीजवपनं, वृक्षारोपणं, **विपणी,** यानादिचालनम्।

## मिश्रमानकालिकदैनिकमंगलादिस्पष्टग्रहाः दिनद्वयग्रहान्तरं गतिश्च

| तिथि दिन | वक्री भौम राश्यादि | बुध राश्यादि | गुरु राश्यादि | शुक्रः राश्यादि | वक्री शनि राश्यादि | केतु राश्यादि | मिश्रमान |
|---|---|---|---|---|---|---|---|
| १ र. | ६।०१।१९।२७ | ३।१२।२६।३१ | ६।२१।५७।४४ | ५।११।३१।२० | ८।०५।५७।४१ | ६।१३।०६।३६ | ४६।१८ |
| २ चं. | ६।०१।१२।४४ | ३।१३।०६।५१ | ६।२२।०३।३३ | ५।१२।२८।११ | ८।०५।५५।३६ | ६।१३।०६।२५ | ४६।१६ |
| ३ मं. | ६।०१।०६।०१ | ३।१३।३७।११ | ६।२२।०९।२२ | ५।१३।२५।०२ | ८।०५।५३।३१ | ६।१३।०३।१४ | ४६।१४ |
| ४ बु. | ६।००।५९।१८ | ३।१४।०७।३१ | ६।२२।१५।११ | ५।१४।२१।५३ | ८।०५।५१।२६ | ६।१३।००।०३ | ४६।१३ |
| ५ गु. | ६।००।५२।३६ | ३।१४।३७।५१ | ६।२२।२१।०० | ५।१५।१८।४४ | ८।०५।४९।२१ | ६।१२।५६।५२ | ४६।१२ |
| ७ शु. | ६।००।४५।५४ | ३।१५।०८।१० | ६।२२।२६।४९ | ५।१६।१५।३५ | ८।०५।४७।१७ | ६।१२।५३।४१ | ४६।११ |
| ८ श. | ६।००।३९।१३ | ३।१५।३८।२९ | ६।२२।३२।३८ | ५।१७।१२।२६ | ८।०५।४५।१३ | ६।१२।५०।३१ | ४६।०९ |
| ९ र. | ६।००।३८।२५ | ३।१६।४०।५८ | ६।२२।३९।४७ | ५।१८।०४।११ | ८।०५।४३।२८ | ६।१२।४७।२० | ४६।०७ |
| १० चं. | ६।००।३७।२७ | ३।१७।४३।२७ | ६।२२।४६।५६ | ५।१८।५५।५५ | ८।०५।४२।०३ | ६।१२।४४।०९ | ४६।०५ |
| १० मं. | ६।००।३६।४९ | ३।१८।४५।५६ | ६।२२।५४।०५ | ५।१९।४७।३९ | ८।०५।४०।२७ | ६।१२।४०।५८ | ४६।०४ |
| ११ बु. | ६।००।३६।०१ | ३।१९।४८।२५ | ६।२३।०१।१४ | ५।२०।३९।२३ | ८।०५।३८।५१ | ६।१२।३७।४७ | ४६।०३ |
| १२ गु. | ६।००।३५।१३ | ३।२०।५०।५४ | ६।२३।०८।२३ | ५।२१।३१।०७ | ८।०५।३७।१५ | ६।१२।३४।३६ | ४६।०२ |
| १३ शु. | ६।००।३३।३२ | ३।२१।५३।२२ | ६।२३।१५।३२ | ५।२२।२२।५१ | ८।०५।३५।४१ | ६।१२।३१।२६ | ४६।०१ |
| १४ श. | ६।००।३३।३२ | ३।२२।५५।५१ | ६।२३।२२।४१ | ५।२३।१४।३५ | ८।०५।३४।१३ | ६।१२।२८।१६ | ४५।५९ |
| १५ र. | ६।००।३८।२६ | ३।२४।१९।०१ | ६।२३।३०।४१ | ५।२४।०२।०१ | ८।०५।३३।३७ | ६।१२।२५।०५ | ४५।५७ |

## दैनिकलग्नसारणी चक्रम

| तिथि दिन | मे.अं. घं.मि. | वृ.अं. घं.मि. | मि.अं. घं.मि. | क.अं. घं.मि. | सिं.अं. घं.मि. | कं.अं. घं.मि. | तु.अं. घं.मि. | वृ.अं. घं.मि. | ध.अं. घं.मि. | म.अं. घं.मि. | कु.अं. घं.मि. | मी.अं. घं.मि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ र. | २३।२६ | १।२२ | ३।३५ | ५।५३ | ८।०९ | १०।२४ | १२।४१ | १४।५८ | १७।०३ | १८।४६ | २०।२० | २१।४९ |
| २ चं. | २३।२२ | १।१८ | ३।३१ | ५।४९ | ८।०५ | १०।२० | १२।३७ | १४।५४ | १६।५९ | १८।४५ | २०।१६ | २१।४५ |
| ३ मं. | २३।१८ | १।१४ | ३।२७ | ५।४५ | ८।०१ | १०।१६ | १२।३३ | १४।५० | १६।५५ | १८।४१ | २०।१२ | २१।४१ |
| ४ बु. | २३।१४ | १।१० | ३।२३ | ५।४१ | ७।५७ | १०।१२ | १२।२९ | १४।४६ | १६।५१ | १८।३७ | २०।०८ | २१।३७ |
| ५ गु. | २३।१० | १।०६ | ३।१९ | ५।३७ | ७।५३ | १०।०८ | १२।२५ | १४।४२ | १६।४७ | १८।३३ | २०।०४ | २१।३३ |
| ७ शु. | २३।०७ | १।०३ | ३।१६ | ५।३४ | ७।५० | १०।०५ | १२।२२ | १४।३९ | १६।४४ | १८।३० | २०।०१ | २१।३० |
| ८ श. | २३।०३ | ०।५९ | ३।१२ | ५।३० | ७।४६ | १०।०१ | १२।१८ | १४।३५ | १६।४० | १८।२६ | १९।५७ | २१।२६ |
| ९ र. | २२।५९ | ०।५५ | ३।०८ | ५।२६ | ७।४२ | ९।५७ | १२।१४ | १४।३१ | १६।३६ | १८।२२ | १९।५३ | २१।२२ |
| १० चं. | २२।५६ | ०।५२ | ३।०५ | ५।२३ | ७।३९ | ९।५४ | १२।११ | १४।२८ | १६।३३ | १८।१९ | १९।५० | २१।१९ |
| १० मं. | २२।५२ | ०।४८ | ३।०१ | ५।१९ | ७।३५ | ९।५० | १२।०७ | १४।२४ | १६।२९ | १८।१५ | १९।४६ | २१।१५ |
| ११ बु. | २२।४८ | ०।४४ | २।५७ | ५।१५ | ७।३१ | ९।४६ | १२।०३ | १४।२० | १६।२५ | १८।११ | १९।४२ | २१।११ |
| १२ गु. | २२।४५ | ०।४१ | २।५४ | ५।१२ | ७।२८ | ९।४३ | १२।०० | १४।१७ | १६।२२ | १८।०८ | १९।३९ | २१।०८ |
| १३ शु. | २२।४१ | ०।३७ | २।५० | ५।०८ | ७।२४ | ९।३९ | ११।५६ | १४।१३ | १६।१८ | १८।०४ | १९।३५ | २१।०४ |
| १४ श. | २२।३७ | ०।३३ | २।४६ | ५।०४ | ७।२० | ९।३५ | ११।५२ | १४।०९ | १६।१४ | १८।०० | १९।३१ | २१।०० |
| १५ र. | २२।३४ | ०।३० | २।४३ | ५।०१ | ७।१७ | ९।३२ | ११।४९ | १४।०६ | १६।११ | १७।५७ | १९।२८ | २०।५७ |

## दैनिक अर्धप्रहरा

| तिथि, दिन | | दिन का अर्धप्रहरा (घण्टा मिनट) | रात्रि का अर्धप्रहरा (घण्टा मिनट) |
|---|---|---|---|
| १ | र. | दि.१०:२३-१:३९। | रा.१०:३७-११:५९। रा.२:४५-४:०७। |
| २ | चं. | दि.७:०८-८:४६। दि.३:१५-४:५३। | रा.१०:३८-१२:१। रा.२:४४-४:०७। |
| ३ | मं. | दि.७:८-८:४५। दि.१:३६-३:१३। | रा.७:५२-९:१५। |
| ४ | बु. | दि.८:४५-१०:२२ दि.१२:०१-१:३६। | रा.१२:१-१:२४। रा.२:४७-४:९। |
| ५ | गु. | दि.३:१५-६:२७। | रा.१२:००-१:२४। रा.४:१०-५:३३। |
| ७ | शु. | दि.८:४७-१२:१। | रा.९:१५-१०:३८। |
| ८ | श. | प्रा५:३४-७:१०। दि१:३५-३:१२। दि४:४९-६:२६ | सा६:२६-७:४९ रा१:२२-२:४६। रा४:१०-५:३४ |
| ९ | र. | दि.१०:२५-१:३८। | रा.१०:३८-१२:०२। रा.१:२५-२:४८। |
| १० | चं. | दि.७:१०-८:४६। दि.३:१२-४:४९। | रा.१०:३६-१२:०० रा.२:४६-४:१०। |
| १० | मं. | दि.७:१२-८:४९। दि.१:३७-३:१५। | रा.७:४९-९:१२। |
| ११ | बु. | दि.८:४८-१०:२४। दि.१२:००-१:३६। | रा.१२:००-१:२४, रा.२:४८-४:१२ |
| १२ | गु. | दि.३:१२-६:२४। | रा.१२:००-१:२४। रा.४:१२-५:३६। |
| १३ | शु. | दि.८:४९-१२:०१ | रा.९:१३-१०:३७ |
| १४ | श. | प्रा.५:३७-७:१३दि.१:३७-३:१३दि.४:४८-६:२३ | रा.६:२३-७:४८रा१:२५-२:४९रा४:१३-५:३७ |
| १५ | र. | दि.१०:२६-१:३७। | रा.१०:२९-११:५१। रा.१:१३-२:३५ तक। |

**रक्षाबन्धनमन्त्रः**- येन बद्धो बली राजा दानवेन्द्रो महाबलः। तेन त्वां प्रतिबध्नामि रक्षे माचल माचल।।

**वृक्षारोपणमन्त्रः**- वसुधेति च शीतेति पुण्यदेति धरेति च। नमस्ते सुभगे देवि द्रुमोऽयं वर्धतामिति।।

**प्रदक्षिणविधिः** - एकं चण्ड्या रवौ सप्त त्रिर्दद्याच्च विनायके। चत्वारि केशवे दद्यात् शिवस्यार्धप्रदक्षिणम्।।
आसन्नप्रसवा नारी जलपूर्णघटं यथा। उद्वहन्ती शनैर्याति तथा कुर्यात्प्रदक्षिणाम्।।

**मूलविचारः- आश्लेषा/मघा-** ति.१ रविवार रा.१२।३० यावत्।
**ज्येष्ठा/मूल-** ति.९ रविवार रा.११।१२ तः ति.१० **मंगलवार** रा.२।५७ यावत्।

**पूजन विशेष- मंगलागौरी व्रतक विशेषता आ संकल्प**-स्कन्द पुराण मे कहल गेल अछि जे- विवाह क बाद पहिल साओन शुक्लपक्षक मंगल दिनं ई व्रत करथि। एहिव्रत क केनिहार वैधव्य दुःख नहिं पबैत छथि। विवाह क बाद पाँच वर्ष ई व्रत करथि। **संकल्प**- व्रत केनिहार स्नान सँ पवित्र शुद्ध आसन पर बैसि पञ्च देवता तथा गौरीक पूजा कऽ कुशि अक्षत जल चन्दन आ द्रव्य लय-**नमो अद्य श्रावणे मासि शुक्ल-पक्षस्य प्रथम भौमवारे अमुकगोत्रायाः (अपन गोत्र)अमुक देव्या(अपन नाम)इह** जन्मनि जन्मान्तरे च सकल- **कल्याणोत्पत्तिपूर्वक पुत्रपौत्र-अवैधव्य-धनधान्य-समृद्धि -सकल मनोरथ-सिद्ध्यर्थं यथाशक्ति**- गन्ध पुष्पधूपदीप ताम्बूल वस्त्र-नानाविध **नैवेद्यादिभिः श्रीमङ्गलागौरीव्रतपूजनमहं करिष्ये।**

**रक्षाबन्धनम्**-श्रावणपूर्णिमायां भद्राशून्यायां रक्षार्थं रक्षिकाबन्धनम्। **भद्रायां** तन्निषेधमाह **स्मृतिः- भद्रायां** द्वे न **कर्तव्ये श्रावणी** फाल्गुनी **तथा।** श्रावणी **नृपतिं हन्ति ग्रामं हन्ति च** फाल्गुनी।। **इयं तु पूर्वविद्धा ग्राह्य**-श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी। पूर्वविद्धातु **कर्त्तव्या शिवरात्रिर्बलेर्दिनम्।।** श्रावणी,दुर्गापूजा की नवमी,दुर्वा और होलिका ये पूर्वविद्धा ही करनी चाहिए । इसी तरह शिवरात्रि एवं गोपूजा भी पूर्वविद्धा ही करना चाहिए। **आद्या मधुश्रावणिका कज्जली** हरितालिका। **चतुर्थीमिश्रिता स्त्रीभिर्दिवानक्ते विधीयते।।** पहली मधुश्रावणी,कजली, हरितालिका या तीज व्रत, स्त्रीयों को चतुर्थीमिश्रित दिनरात में करने का विधान है। रम्भा नामक व्रत को छोड़कर तृतीया में इत्यादि **वचनों से** चतुर्थीयुतैव करना चाहिए। **गणेशचतुर्थीनिर्णय**- श्रावणशुक्लचतुर्थीगणेशचतुर्थी। सा च पूर्वविद्धा ग्राह्य। **तृतीयासंयुता या तु सा चतुर्थी** फलप्रदा। कर्तव्या व्रतिभिः सा तु गणनाथसुतोषिणी।। **नागपञ्चमी**-श्रावणशुक्लपञ्चमी नागपूजादौ षष्ठीयुता अन्य पञ्चम्यस्तु चतुर्थीयुताः कार्याः। पञ्चमी नागपूजादौ कार्या षष्ठीसमन्विता। तस्यान्तु तुषिता नागा इतरासु चतुर्थिका।
**स्मृति**-श्रावणे पञ्चमी शुक्ला सम्प्रोक्ता नागपञ्चमी। तां परित्यज्य पञ्चम्यश्चतुर्थीसहिताः स्मृताः।
**ग्रहयोगेनवृष्टिविचारः**-बुधशुक्रमहीसूनुगुरवश्चैकराशिगाः। निःसंशयः तदा काले जायते वृष्टिरुत्तमा।। समागमे ह्यसितयोस्तथा च गुरुशुक्रयोः। तथैव जीवबुधयोर्वृष्टिः स्यान्नात्र संशयः।। यदा भवन्ति सूर्यस्य ग्रहाः पृष्ठावलम्बिनः। पुरतो वा यदा यान्ति तदा त्वेकार्णवा मही।।

८ शनौ वल्ली ८।३९।२४।४४ अयनांशाः २२।४७।२२



१४ शनौ वल्ली ८।३९।२४।५१ अयनांशाः २२।४७।२३



